९ ॥ कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

ब्रह्म स्यात् कार्यशेषं निखिलमवयवाभावतः सांशता चेत्
व्याकोपः स्यादिदानीमवयवविरहश्राविणीनां श्रुतीनाम् ।
हेतुत्वं तस्य तस्मात् विहतमुभयथेत्येतदप्यात्तसारं
[1] वैलक्षण्यात्प्रकाराच्छ्रुतिभिरपि तथा ज्ञापनाच्छक्तिमत्त्वात् ॥

१० ॥ प्रयोजनवत्त्वाधिकरणम् ॥ १० ॥

कामानां समवाप्तितो न हि फलं किंचित् समालोक्यते
सृष्टेरस्य [2]परस्य नापि दयया दुःखैकहेतुत्वतः ।
नैवैतत् स हि लीलयैव तनुते पुण्याद्यपेक्षावशात्
वैषम्यादि च नास्ति कर्मवशतासिद्धेरनादित्वतः ॥

कपिलस्मृतेर्विरोधात्[१] हिरण्यगर्भस्मृतेर्विरोधाच्च[२] ।
न्यायविरोधात्[३,४] भोगप्रसङ्गतः[५] [3]कार्यहेतुभेदाच्च[६] ॥

जीवब्रह्मैकत्वात्[७] कारकसंग्रहणहानितश्चापि[८] ।
कार्यैकशेषभावात्[९] [4]फलहानेश्चोत्थितं तु पर्यहरत्[१०] ॥

---

द्वाभ्यां स्मृत्यविरोधः स्यात् शेषैर्न्यायाविरोधिता ।
चतुर्थपञ्चमौ तत्र तृतीयोक्तौ प्रसंगतः ॥ १२ ॥

---

[1]वैलक्षण्यात् स्वकण्ठात्-क. [2]परस्य वापि-ख.

[3]कार्यहेतुत्वाच्च—ख; कार्यभेदाच्च-क. [4]फलहानेश्चार्थिकं—ख.

तस्मात् षष्ठं तृतीयं च पादेऽस्मिन् संगते मते ।
षष्ठादयस्तु चत्वारः संगच्छन्ते यथाक्रमम् ॥ १३ ॥

तच्छायवाक्यैरुत्थानं तथा न्यायेन चोद्गमः ।
इति पूर्वेण पादेन संगतिः स्यात् सुशोभना ॥ १४ ॥

॥ इति द्वितीये प्रथमः ॥

---

## ॥ द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

११ ॥ रचनानुपपत्त्यधिकरणम् ॥ १ ॥

वेदादृता यद्यपि तत्त्वसंख्या
जीवान् बहून् इच्छति चापि तन्त्रम् ।
यत्कारणं तत् खलु कर्त्रपेक्षं
नैतत्तथा [1]तान्त्रिकमित्यसाधु ॥ १५ ॥

१२ ॥ महद्दीर्घाधिकरणम् ॥ २ ॥

ईशश्च कर्ता बहवश्च जीवाः
तथाऽपि न न्यायगतिस्समर्था ।
कार्यानुपायादणुभिर्निरंशैः
[2]कार्यत्वतोऽरूपतया च तेषाम् ॥ १६ ॥

---

[1]तान्त्रिकमत्यसाधु—ख; तान्त्रिकमत्र साधु—क;

[2]अन्यत्वतोऽरूपतया-क.

१३ ॥ समुदायाधिकरणम् ॥ ३ ॥

संघैरणूनां [1]*[ हि धरादयः स्युः
धरादिभूतैः करणादयश्च] ।
इत्यप्यसारं क्षणिकाः पदार्थाः
क्व संहताः स्युः क्व च कार्यसिद्धिः ॥१७॥

१४ ॥ उपलब्ध्यधिकरणम् ॥ ४ ॥

आकार एकस्तु विवादहानेः
ज्ञानस्य नार्थस्य ततः स नास्ति ।
इत्यप्यसत् स्यात् त्रितयावभासात्
विज्ञानवत् [2]ज्ञेयतदाश्रयौ च ॥ १८ ॥

१५ ॥ सर्वथानुपपत्त्यधिकरणम् ॥ ५ ॥

नित्योत्पत्तिप्रसङ्गात् अविकृतभवनं नाम नैवोपपन्नं
नैवावस्थानहानेः विकृतभवनमप्यश्नुते [3]युक्तिमत्ताम् ।
तस्मात्तुच्छात् प्रभूतं भुवनं इति न सद्वस्तुनः कस्यचित्स्यात्
भावाभावव्यवस्था [4]तादितरविषये तेन तुच्छत्वहानिः ॥

१६ ॥ एकस्मिन्नसंभवाधिकरणम् ॥ ६ ॥

सर्वं च [5]सत्त्वादिपटादिभावैः
भिन्नं त्वभिन्नं स्थिरमस्थिरं च ।

---

[1]'हि महदादयः स्युः सत्त्वादिमूर्तैः-क'. [2]ज्ञायत एतदाश्रयौ-ख; ज्ञानतदा-क. [3]युक्तिमत्या-क. [4]व्यतिकरविषयौ-ख. [5]सत्त्वादिवदादि-ख. 'तन्त्वादिपटादिभावैः'–इति स्यात्–श्री.

इत्यप्यसत् येन [1]विरुद्धधर्मौ
[2]नैकाश्रयावन्यकृता प्रतीतिः ॥ २० ॥

१७ ॥ पशुपत्यधिकरणम् ॥ ७ ॥

पत्युः पशूनां मतं आदरार्हं
सर्वज्ञभावाच्च परिग्रहाच्च ।
इत्यप्यसत् वेदविरुद्धधर्म-
परावरादिप्रतिपादनेन ॥ २१ ॥

१८ ॥ उत्पत्त्यसंभवाधिकरणम् ॥ ८ ॥

जीवः परस्मात्तु मनस्तु जीवात्
इत्यादिभिः वेदविरोधदृष्टेः ।
स्यात् [3]पञ्चरात्रं न सत् इत्यसारं
व्यूहाभिधानात् प्रतिषेधतश्च ॥ २२ ॥

कपिलकणभुग्बुद्धार्हन्तो[4] हताः सह शंभुना
कुलिशनिशितैरेतैस्तर्कैः अकर्कशबुद्धयः ।
अपि च भगवद्दृष्टा श्रीपाञ्चरात्रगतिस्त्वियं
न खलु सदृशी बाह्यैरन्यैरिति प्रतिसाधितम् ॥२३॥

स्मृतिन्यायाविरोधं च परपक्षपराहतिं ।
विधाय परतो द्वाभ्यां कार्यभावो [5]विचिन्त्यते ॥२४॥

॥ इति द्वितीयस्य द्वितीयः ॥

---

[1]विरुद्धधर्मा—क. [2]नैकाश्रया त्वन्यकृता—क. [3]पञ्चसारं—क.
[4]बौद्धार्हन्तः—क. [5]विधीयते—ग.

॥ द्वितीयाध्यायस्य तृतीयः पादः ॥

१९ ॥ वियदधिकरणम् ॥ १ ॥

उत्पत्तिमन्तो न यथैव जीवाः
नभश्च नोत्पत्तिमत् [1]अंशहानेः ।
इति त्वसारं वदति श्रुतिश्चेत्
तथैव तत् स्यात् न तु तर्कभङ्गः ॥ २५ ॥

२० ॥ तेजोऽधिकरणम् ॥ २ ॥

कार्याणि सर्वाणि [2]तथा श्रुतत्वात्
स्थानान्तरात् कारणतो भवन्ति ।
नैवं श्रुतेरव्यवधानदृष्ट्या
तत्तच्छरीरात् परतो भवन्ति ॥ २६ ॥

२१ ॥ आत्माधिकरणम् ॥ ३ ॥

"तोयेन जीवान्" इति वाक्यभावात्
प्रतिज्ञया जायत एव जीवः ।
इदं त्वसारं कृतविप्रणाश-
प्रसङ्गतो "नित्य" इति श्रुतेश्च ॥ २७ ॥

२२ ॥ ज्ञाधिकरणम् ॥ ४ ॥

विज्ञानशब्दात् [3]स्वपनेष्वदृष्टेः
संज्ञानमागन्तुकचेतनो वा ।

---

[1]अंशभानेः—क. [2]तथाश्रितत्वात्—ख.
[3]स्वप्ने त्वदृष्टेः—ग; स्वप्ने स्वदृष्टेः—क.

नैवं श्रुतेः संकुचितं सुषुप्तौ
ज्ञानाभिधा तद्गुणसारतः स्यात् ॥ २८ ॥

२३ ॥ कर्त्रधिकरणम् ॥ ५ ॥

नान्यं गुणेत्यादिषु कर्तृताऽस्य
निषिध्यते येन ततो न कर्ता ।
इत्येतदेवं न विशङ्कनीयं
शास्त्रार्थवत्त्वात् उपपत्तितश्च ॥ २९ ॥

२४ ॥ परायत्ताधिकरणम् ॥ ६ ॥

कर्तृत्वं एतस्य परानपेक्षं
शास्त्रार्थवत्त्वाय स हि स्वतन्त्रः ।
नैतत् श्रुतिभ्यो न च शास्त्रकोपः
प्रयत्नसापेक्षतया परस्य ॥ ३० ॥

२५ ॥ अंशाधिकरणम् ॥ ७ ॥

भेदान्न जीवोंऽश इति श्रुतीनां
दृष्टो विरोधस्त्वितरेतरेण ।
अंशस्मृतेः पादतयोपदेशात्
स्यादंश एवास्य परस्य जीवः ॥ ३१ ॥

---

कार्यता वियदादीनां[1] तस्याश्चाव्यवधानता[2] ।
उत्पत्त्यभावो[3] जीवस्य ज्ञातृता[4] कर्तृताऽपि च[5] ॥३२॥
कर्तृतायाः परापेक्षा[6] परं प्रत्यंशताऽपि च[7] ।
इत्थमर्थास्त्वमी सर्वे पादेनानेन चिन्तिताः ॥ ३३ ॥

---

प्रथमश्च द्वितीयश्च तृतीयश्चात्र [1]सङ्गताः ।
तृतीयशेषाश्चत्वारः प्रसङ्गात् [2]त्विह चिन्तिताः ॥३६॥

॥ इति द्वितीयस्य तृतीयः ॥

## ॥ द्वितीयाध्यायस्य चतुर्थः पादः ॥

---

२६ ॥ प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

न हि जननं इन्द्रियाणां प्राणा अग्रेऽभवन् इति श्रुत्या ।
नैवं प्राणस्तु परः प्रतिज्ञया गौणमेव [*]बहुवचनम् ॥

२७ ॥ सप्तगत्यधिकरणम् ॥ २ ॥

सप्त तु यदेति वाक्यात् सप्त प्राणा इति [3]श्रुतेश्चापि ।
नैवं प्रधानभावात् "दशेमे" इति वाक्यतः स्मरणात् ॥

२८ ॥ प्राणाणुत्वाधिकरणम् ॥ ३ ॥

तानि तु विभूनि युक्तं "सर्वेऽनन्ताः समा" इति श्रवणात् ।
नैवमुपास्त्यर्थत्वात् उत्क्रमणश्रुतित एव चोत्क्रमणे ॥३७॥

२९ ॥ वायुक्रियाधिकरणम् ॥ ४ ॥

वाक्यात् प्रसिद्धेश्च [4]विशंक्यतेऽयं
न वायुमात्रं न च तत्क्रिया वा ।
प्राणस्तु देहादिभृदेव वायुः
[5]प्राणस्य वायोश्च पृथक्त्वशब्दात् ॥ ३८ ॥

---

[1]सङ्गतः-ख. [2]परिचिन्तिताः-ख; त्विति चिन्तिताः-ग. [*]बहुभवनं-क.
[3]श्रुतेश्चैव–ख. [4]विशंक्यते यत्–ख. [5]प्राणे स्ववायोश्च–ख.

३० ॥ श्रेष्ठाणुत्वाधिकरणम् ॥ ५ ॥

लोकैः त्रिभिः साम्यगिरा विभुः स्यात्
[1]प्राणस्त्ववतीदं न विशङ्कनीयम् ।
उत्क्रान्तिशब्दादिभिरस्य लोकैः
[2]साम्यश्रुतिर्याऽत्र तथाऽर्थवादः ॥ ३९ ॥

३१ ॥ ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

[3]वागाद्यधिष्ठानं इह स्वतः स्यात्
जीवेन सार्धं ज्वलनादिकानां ।
नैवं परात्मामननात् अमीषां
एतत्तु "योऽग्नौ" इति च श्रुतत्वात् ॥ ४० ॥

३२ ॥ इन्द्रियाधिकरणम् ॥ ७ ॥

प्राणाभिधानात् उपकारसाम्यात्
ज्येष्ठोऽपि चायं स्फुटमिन्द्रियं स्यात् ।
नैतत् "दशे"ति व्यपदेशभावात्
प्राणो मनश्चेन्द्रियमित्यतश्च ॥ ४१ ॥

३३ ॥ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

नामादिसृष्टिस्तु हिरण्यगर्भात्
[4]भवेत् "अनेने"ति तु वाक्यभावात् ।
नैवं परादेव तु तच्छरीरात्
सेयं त्रिवृत्कारसमानकर्तुः ॥ ४२ ॥

---

[1]प्राणस्त्विदानीं—क. [2]साम्यश्रुतिर्ध्यातृतया—क.
[3]वागाद्यनुष्ठानं-ख. [4]भवत्यनेन—क.

[1]उत्पत्त्या [2]संख्यानं [3]परिमाणं चैव करणानाम् ।
प्राणस्य च स्वरूपं[4] परिमाणमानिन्द्रियत्वं च[7] ॥ ४३ ॥

एतेषां सर्वेषां सर्गकरो व्यष्टिभूतानां[8] ।
इत्येतदखिलममुना पादेन विचिन्तितं सम्यक् ॥४४॥

प्रथमे प्रसक्तरूपाः *पञ्चापि विचिन्तिता द्वितीयाद्याः ।
तस्मात् सङ्गतमस्मिन् पादे प्रथमं च चरमं च ॥ ४५ ॥

प्राणस्वरूपचिन्ता प्राणतया शब्दनेन करणानाम् ।
प्रासङ्गिकप्रसिद्धा प्रसङ्गतस्तद्विशेषचिन्ता च ॥ ४६ ॥

†अण्डबहिर्भूतानां पूर्वेण विचिन्तिता सृष्टिः ।
सृष्टिस्तु चिन्तिता स्यात् अण्डान्तर्वर्तिनामनेनापि॥४७॥

॥ इति द्वितीयस्य चतुर्थः ॥

---

इति सेनेश्वराचार्यकृते न्यायकलापसङ्ग्रहे
॥ द्वितीयोऽध्यायः ॥

---

## ॥ तृतीयोऽध्यायः—प्रथमः पादः ॥

---

१ ॥ तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

न भूतसूक्ष्मैः सह याति देही
तत्रैव तेषां सुलभत्वहेतोः ।

---

*पञ्च विचिन्तिताः-ग. †अन्तर्बहि-क.

नैवैवं 'आपः पुरुषा भवन्ति'
इत्येवं श्रुतत्वात् सह तैः प्रयाति ॥ १ ॥

२ ॥ कृतात्ययाधिकरणम् ॥ २ ॥

'आप्यान्तं' इत्यादिभिरेव वाक्यैः
आयातु जीवो न तु कर्मशेषी ।
नैतत्फलं कर्मनिबन्धनं तु
'कपूयचारा' इति च श्रुतत्वात् ॥ २ ॥

३ ॥ अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

'ये वै च केऽपी'त्यविशेषशब्दात्
धूमादिकं केवलपापिनां च ।
इति त्वसत् स्यात् 'अथ ये'ति वाक्यात्
[1]पुण्यावलम्बी तु विशेषशब्दः ॥ ३ ॥

४ ॥ तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

तद्देहता स्यात् वियदादिभावः
सोमत्ववन्नास्ति यतो विशेषः ।
नैवं, न भोगोऽस्ति यतोऽत्र तस्मात्
सादृश्यमेवात्र न तत्तनुत्वम् ॥ ४ ॥

५ ॥ नातिचिराधिकरणम् ॥ ५ ॥

आव्रीहिभावात् आचिरात् चिरात् वा
सन्तिष्ठतेऽयं नियतेरभावात् ।

---

[1] 'पुण्यावलम्बी त्वविशेष'—इति स्यात् - श्री ।

नैवं विशंक्यं परतो विशेषात्
[1]'अतो हि दुर्निष्पतं' इत्यमुष्मात् ॥ ५ ॥

६ ॥ अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

'जायन्त' [2]इत्येव विशेषशब्दात्
व्रीह्यादिदेहास्तु भवन्ति जीवाः ।
नैतत्तु गौणं जननाभिधानं
तद्धेत्वभावात् परतस्तु भावात् ॥ ६ ॥

भूतसूक्ष्मैः परिष्वङ्गः[1] कर्मशेषसहायता[2] ।
अपुण्यानामनारोहो[3] वियदादिसदृक्षता[4] ॥ ७ ॥
तत्राचिरादवस्थानं[5] व्रीह्यादेः [3]श्लेषणं[6] तथा ।
इत्यर्थाः षडमी सम्यक् पादेनानेन चिन्तिताः ॥ ८ ॥

॥ इति तृतीये प्रथमः ॥

---

## ॥ तृतीयाध्यायस्य द्वितीयः पादः ॥

---

[4]गमनागमनप्रकारचिन्ता
विहितोपासिसिषाप्रसिद्धिहेतोः[5] ।
न तु कश्चन दोषमात्मसंस्थं
यदि नेक्षेत तदा परं ह्युपास्ते ॥ ९ ॥

---

[1]अतो न—क, ग. [2]इत्यादिविशेषशब्दात्-ग. [3]श्लेष्मणः—ग.
[4]गमनं गमन—ख. [5]प्रसिद्धहेतोः—ख.

७ ॥ सन्ध्याधिकरणम् ॥ १ ॥

गुणित्वतः सन्निधितश्च जीवः
स्वाप्नार्थकर्तेति न शंक्यमेतत् ।
असंभवत्वात् अहिताक्रियायाः
तिरोहितत्वेन [1]गुणस्य चास्य ॥ १० ॥

८ ॥ तदभावाधिकरणम् ॥ २ ॥

[2]श्रुतौ विशेषाग्रहणात् सुषुप्तेः
[3]नाड्यः पुरीतत् परमोऽथवा स्यात् ।
भूमिस्त्विवतीदं न, विकल्पदोषात्
[4]*[प्रासादखट्वाशयनादिवत् स्यात्] ॥११॥

९ ॥ कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

[5]प्राप्त्या परस्याखिलकर्मनाशात्
अन्यः प्रबोद्धा न पुनः सुषुप्तः ।
[6]नैवार्थवत्त्वात् विधिकर्मणोः स्यात्
अनुस्मृतेः व्याघ्र इति [7]श्रुतेश्च ॥ १२ ॥

१० ॥ मुग्धाधिकरणम् ॥ ४ ॥

प्राणस्य सर्वेन्द्रियसंहृतेश्च
व्यापारहानेर्मरणं तु मूर्च्छा ।

---

[1]गुणस्य चाद्य—क, ग. [2]श्रुतौ विशेषग्रहण—ग.
[3]नाद्यः पुरीतत् परतो—क. [4]प्रासादखट्वाशयनैरिव स्यात्—क.
[5]प्राप्ता-क. [6]नैवार्थवत्स्यात्-क. [7]स्मृतेश्च-ग.

[1]मुग्धेऽर्धलाभो मरणस्य सा स्यात्
आकारवैषम्यसमुत्थितिभ्याम् ॥ १३ ॥

११॥ उभयलिङ्गाधिकरणम् ॥ ५ ॥

आत्मेच्छया [2]वाऽप्यतिहेयभावात्
पूयादिसङ्गः स परस्य दोषः ।
तत्स्थानसंबन्धितयेति, नैतत्
सर्वत्र [3]निर्दोषगुणित्वशब्दात् ॥ १४ ॥

१२ ॥ अहिकुण्डलाधिकरणम् ॥ ६ ॥

[4]नानात्वैकत्वयुक्तेः [5]परिणमनमचित्त्वेन चेत् बाधितत्वं
निर्दोषत्वश्रुतेः स्यात् अथ तदुभययोरेकसामान्ययोगः ।
[6]नैतत् स्यान्नैव लोके क्वचिदपि कथितः खण्डशब्देन मुण्डः
तस्मादंशत्वमंशित्वमपि हि जगतो ब्रह्मणश्चाऽऽत्मवत् स्यात् ॥

१३ ॥ पराधिकरणम् ॥ ७ ॥

सेतुत्वव्यपदेशतो मिततया संशब्दनात् प्रापक-
श्रुत्या चापि 'ततो यदुत्तरतरं' त्वित्येव भेदग्रहात् ।
प्राप्योऽन्यः परतोऽपि कश्चिदिति यन्नैतत् त्वसंभेदनात्
ध्येयत्वादपवर्गसाधनतया [7]हेतुत्वसंशब्दनात् ॥

---

[1]नैवार्धलाभो—क, ख. [2]वाप्यतिदेहभावात्-क.
[3]निर्दोषगुणत्वशब्दात्-ख. [4]नानात्वैकत्वयुक्तः-क.
[5]अणुत्वेन चेत् साधितत्वं-क. [6]नैकत्व-क.
[7]हेतुत्वसन्दर्शनात्-क.

१४ ॥ फलाधिकरणम् ॥ ८ ॥

साक्षात् क्रमात् वा फलदत्वदृष्टेः
अत्रापि कर्मैव फलं ददातु ।
[1]नैवेदमन्यार्थतया तु क्लप्तेः
श्रुतिस्मृतिभ्यश्च स एव दत्ते ॥ १७ ॥

स्वप्नः[१] सुषुप्तिः[२] प्रतिबोधनं[३] च
[2]मूर्च्छा[४] च जीवस्य, परस्य चापि ।
निर्दोषभावो[५] जगदंशभावः[६]
सर्वेश्वरत्वं[७] फलदातृता[८] च ॥ १८ ॥

न्यायैश्चतुर्भिराद्यैः विचिन्तितः [3]पूर्वपादशेषस्तु ।
तस्मादत्र तु पादे सुसङ्गतं पञ्चमात् प्रभृति ॥ १९ ॥

स्थानित्वात् अचिदैक्यात् [4]अवरत्वात् अफलदत्वाच्च ।
अनुपास्यं इति तु शङ्कां शकलयति सौत्रैः [5]चतुर्भिः इह ॥

॥ इति तृतीये द्वितीयः ॥

॥ तृतीयाध्यायस्य तृतीयः पादः ॥

१५ ॥ सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

अविशेषतः श्रुतत्वात् प्रकरणभेदाच्च भेदिनी विद्या ।
नैवं प्रतिपत्तृणां भिन्नत्वात् [6]चोदनाद्यभेदाच्च ॥ २१॥

---

[1]नैवेदमभ्यासतया तु क्लप्ते-क. [2]मूर्च्छापि जीवस्य परस्य वाऽपि-क
[3]पूर्वपादशेषः सः-ग. [4]अंशत्वादफलकत्वाच्च-ख.
[5]चतुर्भिः-क; चतुर्भिरिमां-ख. [6]चोदनाद्यविशेषाच्च-क.

१६ ॥ अन्यथात्वाधिकरणम् ॥ १ ॥

उद्गीथैक्यं चोदनादेरभेदात्
छन्दोगानां वाजिनां चेति नैतत् ।
उद्गीथांशोद्गीथयोः प्राणदृष्ट्या
[1]रूपानैक्यात् [2]कर्मकर्त्रोस्तथा च ॥ २२ ॥

१७ ॥ सर्वाभेदाधिकरणम् ॥ ३ ॥

प्राणस्य ज्यैष्ठ्यादौ [3]सत्यपि न वसिष्ठतादयः कथिताः ।
भेदो [4]रूपविभेदान्नैतत् स्युस्तेऽपि तादितराभेदात् ॥ २३ ॥

१८ ॥ आनन्दाद्यधिकरणम् ॥ ४ ॥

अप्रकरणपठितत्वात् आनन्दाद्या गुणा न संग्राह्याः ।
सर्वास्विति तु न शंक्यं, तैस्तु विना तन्निरूपणाशक्तेः ॥ २४ ॥

१९ ॥ कार्याख्यानाधिकरणम् ॥ ५ ॥

'आचामेत्' इति विहितं [5]प्राणोपास्त्यङ्गमन्यदाचमनं ।
नैतत् अनूद्य विधेयं ह्यप्राप्तेः प्राणवासस्त्वम् ॥ २५ ॥

---

[1]रूपस्यैक्यात्-क. [2]कर्मकर्तुस्तथा-क. [3]सत्यपि वसिष्ठतादयः-क. सत्यपि च-ख. [4]रूपविभेदा अनेकत्वास्तस्यापि क; रूपविभेदाः-ख; रूपविभेदान्नैतस्यास्तेपि-ग;
[5]प्राणे वासस्त्वाङ्गमन्याचमनं-क.

२० ॥ समानाधिकरणम् ॥ ६ ॥

सङ्कल्पसत्यवशिताद्यतिरेकात् *[[1]विरूपभेदतो ह्यस्याः ।
भेद इति नैव] यस्मात् वशिता सङ्कल्पसत्यताविततिः ॥

२१ ॥ सबन्धाधिकरणम् ॥ ७ ॥

भास्वद्धृषीकासनयोरुपास्याभेदात् अभेदात् [2]उभयाह्वये द्वे ।
न रूपभेदात् स्थलजात् [3]विभिन्ने व्यवस्थितैकाह्वयने यथाक्रमम् ॥

२२ ॥ संभृत्यधिकरणम् ॥ ८ ॥

किञ्चिन्नारभ्योक्तेः द्युव्याप्तिः संभृतिश्च वीर्याणां ।
सर्वास्विति तु न यस्मात् द्युव्याप्तिर्नाल्पदेशसंग्राह्या ॥

२३ ॥ पुरुषविद्याधिकरणम् ॥ ९ ॥

विद्याभेदः सत्यपि संज्ञैक्ये पुरुषविद्येति ।
सवनादियज्ञसंपरिकल्पन [4]भेदकृतरूपभेदत्वात् ॥२९॥

२४ ॥ वेधाद्यधिकरणम् ॥ १० ॥

'शं नो मित्र'त्याद्या मन्त्रा विद्याङ्गं अन्तिकामननात् ।
न हि, शुक्रादिकमन्त्रवदध्ययनाङ्गं तथैव सामर्थ्यात् ॥

---

[1]'रूपभेदतो ह्यन्या । विद्येति नैव' इति वा, 'रूपभेदतो ह्यस्याः । भेद इति नैव' इति वा स्यात् इति प्रतिभाति । रूपभेदतोऽप्यन्यः । भेद इति नैव-क. [2]उभयाह्वये ते—क.

[3]विभिन्नेऽप्यवस्थितैकाह्वयने-क. [4]भेदकृतरूपभेदतः—क.

२५ ॥ हान्यधिकरणम् ॥ ११ ॥

[1] पुण्यादिहान्युपायन *[एकं चिन्त्यं समुच्चितं चेह] ।
[2]पृथगाम्नानफलत्वात् नैतत् सापेक्षतः परस्परतः ॥२१॥

२६ ॥ सांपरायाधिकरणम् ॥ १२ ॥

[3]पुण्यादिहानिचिन्ता गत्युपपत्तेः मृतौ च मार्गे च ।
[4]कार्येति नैव मरण कर्तव्या तावदित्युक्तेः ॥ २२ ॥

२७ ॥ अनियमाधिकरणम् ॥ १३ ॥

तद्विद्यानिष्ठानां तद्विद्योक्तार्चिरादिगतिचिन्ता स्यात् ।
प्रकरणभेदान्नैतत् तद्य इति तु समानतावचनात् ॥ २३ ॥

२८ ॥ अक्षरध्यधिकरणम् ॥ १४ ॥

विद्याविशेषकथितास्त्वस्थूलाद्या भवन्ति तत्रैव ।
[5]नान्यत्र मानहानेः नैवानन्दादिवन्निरूपकतः[6] ॥ २४ ॥

२९ ॥ अन्तरत्वाधिकरणम् ॥ १५ ॥

प्रष्ट्रोर्भेदेऽपि तथा व्यतिहारः प्राणनाशनायाद्योः ।
वाक्यं सद्विद्यावत् 'यत् साक्षात्' इति [7]समानतः प्रश्ने ॥ २५॥

---

[1] 'पुण्यादिहान्युपायन........सञ्चितास्वेव' इत्येतावानेवोपलभ्यते ॥ सञ्चिता सेवा-ग. [2]पृथगज्ञानफलत्वात्-क. [3]पुण्यादिहारिचिन्ता गत्युपपत्तिः धृतौ-क, ख. [4]कार्येणैव हि मरणे कर्तव्यतावदित्युक्तेः-क; कार्ये नैव च-ख. 'स्यात्' इति न-ग. [5]नेतरत्र-क. [6]निरूपतः ग. [7]संमानतः प्रष्ट्रोः-क.

३० ॥ कामाद्यधिकरणम् ॥ १६ ॥

आकाशतच्छ्रयानौ समुपास्यौ यदि न दहरविद्यैका ।
सामान्यात्तु गुणानां क्वचिदाकाशस्य हृदयवाचित्वात् ॥

३१ ॥ तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥

उद्गीथस्योपास्तिः नियता स्यात् अङ्गवत्तदाश्रयतः ।
अनियमनमर्थवत्त्वात् अनुपासितुरपि च [1]कर्मितहेतोः ॥

३२ ॥ प्रदानाधिकरणम ॥ १८ ॥

साधारणत्वहेतोः गुणी तु गुणचिन्तनेषु [2]नावर्त्यः ।
नैवं विशिष्टभेदात् [3]प्रतिगुणमावर्तनीय एव गुणी ॥३८॥

३३ ॥ लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

[4]पूर्वानुवाकनीत्या दहरोपास्तिसमुपास्यनिर्णयनम् ।
प्रकृतत्वादिति [5]नैवं स्ववाक्यबलतः समस्तनिर्णयनम् ॥३९॥

३४ ॥ पूर्वविकल्पाधिकरणम् ॥ २० ॥

*अविधेयः स्वस्य विधौ च [6]क्रियामयेष्टकचितादिवह्नीनाम् ।
वाक्यात् कल्प्यविधित्वात् विद्यामय्यो मनश्चिताद्याः स्युः ॥

३५ ॥ शरीरे भावाधिकरणम् ॥ २१ ॥

कर्तृत्वादिविशिष्टो जीवो ध्येयः शरीरिताहेतोः ।
[7]नैवं गुणाष्टकयुतः प्राप्यत्वात् स्यात् यथाक्रतुन्यायात् ॥४१॥

---

[1] कर्मताहेतोः-क. [2] नाचिन्त्यः-क. [3] प्रतिदिनमावर्तनीय-क.
[4] पूर्वानुवाकसिद्ध्या-ख. [5] नैव. [6] क्रियामयेष्टक-क.
[7] नैव गुणाष्टकयुक्तः-ख. * "अविधेः क्रतोः स्वदेशे क्रियामयता स्यान्मनश्चितादीनाम् । वाक्यात् कल्प्यविधित्वात् विद्यारूपा मनश्चिताद्याः स्युः ॥" इति स्यात् चेत् समन्वित इव भाति-श्री.

३६ ॥ अङ्गावबद्धाधिकरणम् ॥ २२ ॥

उद्गीथस्योपास्तिः नियता स्वास्वेव [1]नेतरास्वमितैः ।
नैवं शंक्यमुपास्तेः केवलमुद्गीथमात्रविषयत्वात् ॥ ४२ ॥

३७ ॥ भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥

उभयत्र फलसमुक्तेः व्यस्तो ऽथवास्तस्समस्तो वा ।
वैश्वानरो विचिन्त्यः नैव निषेधात् समस्त एव स्यात ॥

३८ ॥ शब्दादिभेदाधिकरणम् ॥ २४ ॥

फलचोदनाद्यभेदात् एकत्वं स्यात् सदादिविद्यानाम् ।
नैवं संज्ञारूपप्रभेदतो भिन्नतैव स्यात् ॥ ४४ ॥

३९ ॥ विकल्पाधिकरणम् ॥ २५ ॥

ब्रह्मानुभूत्यपेक्षाबाहुल्यात् स्यात् सदादिविद्यानाम् ।
एकत्रैव समुच्चितिरिति नैव फलस्य [2]सर्वत्रैवैक्यात् ॥

४० ॥ यथाश्रयभावाधिकरणम् ॥ २६ ॥

[3]उद्गीथाद्यनुचिन्तननियमाभावस्तु नैव पूर्वोक्तः ।
अफलत्वतः स्ववाक्ये नैव-तथाश्रयविधेः [2]फलित्वाच्च ॥

---

विद्यैक्यं[1] उद्गीथभिदा[2] प्राणोपास्त्यैकता तथा[3] ।
आनन्दादिसमाहारः[4] प्राणवासस्त्वचोदनम्[5] ॥ ४७ ॥

शाण्डिल्यैक्यं[6] व्यवस्था च [7]नाम्नोः द्युव्यापनस्य च[8] ।
विभेदः पुरुषोपास्तेः[9] वेदाद्यध्ययनाङ्गता[10] ॥ ४८ ॥

---

[1]नेतरास्यमितैः-क. [2]सर्वैक्यात-ग. [2]फलत्वाच-क.
[3]उद्गीथाद्यनुचिन्ता-ग. *नामाद्युद्व्यापनस्य—क; नातो—ग.

हानाद्यन्योन्यसंबन्धः[11] [१]कालस्तच्चिन्तनाविधेः[12] ।
साधारण्यं सरण्याश्च[13] तथाऽस्थूलादिसाम्यता[14] ॥ ४
प्राणाशनायाद्येकत्वं[15] ततश्च दहरैकता[16] ।
उद्गीथोपास्त्यनियमो[17] [२]गुण्यावृत्त्यनुचिन्तनम्[18] ॥
सर्वोपास्यविनिर्णीतिः[19] विद्यात्वं च मनश्चिताम्[20] ।
जीवस्य [३]गुणितोपास्तिः[21] सर्वत्रोद्गीथचिन्तनम्[22] ॥
वैश्वानरस्य सामस्त्यं[23] सद्विद्यादेर्विभिन्नता[24] ।
विद्यानामसमाहारः[25] उद्गीथाऽनियतिः[26] पुनः ॥५२॥
भेदाभेदौ च विद्यानां गुणानां च ग्रहाग्रहौ ।
इत्थमेतेन पादेन साधिष्ठं परिचिन्तितम् ॥ ५३ ॥

॥ इति तृतीयस्य तृतीयः ॥

---

## ॥ तृतीयाध्यायस्य चतुर्थः पादः ॥

---

४१ ॥ पुरुषार्थाधिकरणम् ॥ १ ॥

कर्माङ्गत्वात् कर्तृनिर्णा[४]यिकायाः
विद्यायास्तत्कर्म दत्ते फलानि ।
नैतज्जीवाधीशनिर्णायकत्वात्
विद्या दत्ते कर्म चाङ्गं त्वमुष्याः ॥ ५४ ॥

---

[१] कालस्तच्चिन्तनं विधिः-ख. [२] गुण्यावर्तनचिन्तनं—ग.
[३] गुणतोपास्तिः—क. [४] निर्णायिकत्वात्—क.

४२ ॥ स्तुतिमात्राधिकरणम् ॥ २ ॥

कर्माङ्गोद्गीथादिसंबन्धमात्रं
दृष्टं यस्मात् तत्स्तुतित्वं रसादेः ।
नासान्निध्यात् तद्विधेयप्रकर्षात्
अप्राप्तत्वाच्चात्र कल्प्यो विधिः स्यात् ॥

४३ ॥ पारिप्लवाधिकरणम् ॥ ३ ॥

प्रतर्दनाद्यास्तु विशेषसंज्ञाः
पारिप्लवार्था विनियोगहेतोः ।
विद्याविधार्थास्तु [1]तदेकवाक्यात्
मन्वादिसंज्ञा चरितार्थनाच्च ॥ ५६ ॥

४४ ॥ अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

विद्यास्तु यज्ञादितदङ्गहानेः
प्रव्राजकानां न हि संभवन्ति ।
नैतत्, 'यदिच्छन्त' इति श्रुतत्वात्
अग्न्याद्यपेक्षारहितैव साऽस्ति ॥ ५७ ॥

४५ ॥ सर्वापेक्षाधिकरणम् ॥ ५ ॥

साधारणत्वात् गृहमेधिनां च
प्रव्राजिवत् सा तु तदङ्गहीना ।
नैवं तु यज्ञादिकवाक्यभावात्
सर्वत्र च स्वाश्रमधर्मवत्त्वात् ॥ ५८ ॥

---

[1]तदैक्यवाक्यात्—ख.

४६ ॥ शमदमाद्यधिकरणम् ॥ ६ ॥

व्यापारकर्माधिकृतत्वहेतोः
तेषां तु विद्या न शमादियुक्ता ।
नैतत् शमादेस्तु तदङ्गभावात्
द्वयोस्तयोः भिन्ननिबन्धनत्वात् ॥ ५९ ॥

४७ ॥ सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

[1]सर्वान्नभुक्तिस्तु विशेषहानेः
स्यात् सर्वदा प्राणविदां इतीदं ।
न शोभते शक्तिविशेषभाजः
प्राणात्यये ब्रह्मविदोऽपि दृष्टेः ॥ ६० ॥

४८ ॥ विहितत्वाधिकरणम् ॥ ८ ॥

विद्याविहीनाश्रमकर्मभूता
यज्ञादयो नैव विरोधभावात् ।
नित्यं तदन्यच्च फलं कथं स्यात्
नैतत्प्रसङ्गो विनियोगभेदात् ॥ ६१ ॥

४९ ॥ विधुराधिकरणम् ॥ ९ ॥

यज्ञादिकर्माङ्गकलापहानेः
विद्याधिकारो न निराश्रमाणाम् ।
तन्नैव रैक्कादिषु लक्षितत्वात्
जपोपवासाद्युपकारतश्च ॥ ६२ ॥

---

[1]सर्वानुभूतिस्तु—क.

५० ॥ तद्भूताधिकरणम् ॥ १० ॥

जपोपवासाद्यनुमोदभावात्
[1]विद्याधिकारो विपरिच्युतानाम् ।
नैतत् स्मृतेः तत्परिहारहानौ ।
सन्दर्शनात् *शिष्टबहिष्कृतेश्च ॥ ६३ ॥

५१ ॥ स्वाम्यधिकरणम् ॥ ११ ॥

क्रत्वङ्गसंबन्धमुपासनं[2] यत्
तत्स्वामिनः तत्फलभोक्तृभावात् ।
नैवार्त्विजां कर्म तदङ्गवत् स्यात्
[3]कर्माङ्गसंबन्धत एव हेतोः ॥ ६४ ॥

५२ ॥ सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥

मन्तव्य इत्येव विधानहेतोः
अनूद्यते मौनं इति त्वसत् स्यात् ।
मौनं प्रकृष्टे मनने हि लोके
प्रसिद्ध्यते तेन विधेयमेतत् ॥ ६५ ॥

५३ ॥ अनाविष्काराधिकरणम् ॥ १३ ॥

विधेयहानेः विदुषस्तु बाल्यं
सर्वं च कामाचरणादि, नैतत् ।
विशेषतो [4]'नाविरता'दिवाक्यैः
[5]बाल्यं त्वनाविष्करणं कुलादेः ॥ ६६ ॥

---

[1]विद्याविकारोऽपि-ग. [2]मुपासनाय-क. [3]कर्मांगसंबन्धतयैव-क.
[4]निर्विरतादि–क. [5]बाल्यं च नाविष्करणं-ग. *शिष्टपरिष्कृतेश्च-ख.

५४ ॥ ऐहिकाधिकरणम् ॥ १४ ॥

यज्ञादिकं त्वभ्युदयादिहेतुः
सद्यः फलं स्यात् अविलम्बहेतोः ।
न तत् बलिष्ठैः प्रतिबन्धहानौ
तत् स्यात् 'यदेवे'ति तु चोदितत्वात् ॥६७॥

५५ ॥ मुक्तिफलाधिकरणम् ॥ १५ ॥

निःश्रेयसैकार्थं [1]उपास्तिकर्म
सद्यःफलं स्यात् प्रबलत्वहेतोः ।
तच्चापि न [2]ब्रह्मविदग्रिमाणां
निन्दादिकस्यातिबलोत्तरत्वात् ॥ ६८ ॥

---

विद्यायाः फलदातृत्वं[१] रसादेश्च विधेयता[२] ।
विद्याङ्गता च यज्ञानां[३] विद्या प्रव्राजिनां तथा[४] ॥६९॥

गृहस्थानां च विद्याया यज्ञादिप्रत्यवेक्षणम्[५] ।
तेषां शमाद्यपेक्षत्वं[६] आहारस्य व्यवस्थितिः[७] ॥ ७० ॥

[3]गार्हस्थ्यस्यापि कर्मत्वं यज्ञादेः कर्मणः तथा[८] ।
विधुराणां अधिकृतिः[९] च्युतानां तद्विहीनता[१०] ॥ ७१ ॥

[4]क्रत्वङ्गोपासने ऋत्विक्कार्यता[११] मौनिताविधिः[१२] ।
बाल्यं त्वस्याप्रकाशत्वं [5]शक्तिविद्याभिजन्मनाम्[१३] ॥

---

[1]उपायकर्म-क. [2]ब्रह्मविदग्रगाणां—क.

[3]गार्हस्थस्यावितर्कत्वं—क. [4]क्रत्वङ्गोपासिकर्मत्वं—क.

[5]शक्तिविद्यातिजन्मनां—क.

[1]प्रतिबन्धे विलम्बित्वं [2]स्वर्ग-मोक्षार्थकर्मणोः ।
इत्यनेनेतिकर्तव्यसंहतिः परिचिन्तिता ॥ ७३ ॥

॥ इति तृतीयस्य चतुर्थः ॥

इति श्रीसेनेश्वराचार्यकृते न्यायकलापसंग्रहे

॥ तृतीयोऽध्यायः ॥

---

## ॥ चतुर्थोऽध्यायः—प्रथमः पादः ॥

---

१ ॥ आवृत्त्यधिकरणम् ॥ १ ॥

ज्ञानस्योपायत्वात् तस्य च सकृदेव कर्तुमर्हत्वात् ।
सकृदेव वेदनं स्यात् नैतदुपास्तित्वचोदनात् ज्ञप्तेः ॥ १ ॥

२ ॥ आत्मत्वोपासनाधिकरणम् ॥ २ ॥

स्वस्मात् विभेदेन परो ह्युपास्यः
भेदस्य सर्वत्र समर्थितत्वात् ।
नैवाहमित्यात्मतया ह्युपास्यः
'त्वं वै'ति शब्दाच्च तदात्मतश्च ॥ २ ॥

३ ॥ प्रतीकाधिकरणम् ॥ ३ ॥

तथा प्रतीकेषु यथेतरेषु
यस्मात् परोपासनताऽविशिष्टा ।
तन्नैव शंक्यं, [3]परमात्मदृष्ट्या
नामादिकानां समुपास्यमानात् ॥ ३ ॥

---

[1]मृतिबन्धे—ख. [2]विश्वमोक्षार्थ—क. [3]परमार्थदृष्ट्या-क.

४ ॥ आदित्यादिमत्यधिकरणम् ॥ ४ ॥

उद्गीथदृष्टिस्तपने तु नीचे
[1]श्रेष्ठं हि कर्मैव फलप्रदत्वात् ।
तन्नैव तस्यापि फलप्रदत्वं
तत्पूजनत्वादिति नान्यथा स्यात् ॥ ४ ॥

५ ॥ आसीनाधिकरणम् ॥ ५ ॥

आसीन इत्येव [2]विशेषहानेः
सर्वप्रवृत्तिष्वपि [3]सा विधेया ।
स्यान्नैवमैकाग्र्यविशेषभावात्
[4]ध्यानश्रुतेश्चोपनिषेदुषः सा ॥ ५ ॥

६ ॥ आप्रयाणाधिकरणम् ॥ ६ ॥

शास्त्रार्थनिर्वृत्तित एव हेतोः
कर्तव्यमेकत्र तु वासरे तत् ।
एतन्न संसिद्ध्यति 'यावदायुः'
[5]इत्येव शब्दात् विधितश्च तस्य ॥ ६ ॥

७ ॥ तदधिगमाधिकरणम् ॥ ७ ॥

"नाभुक्तं" इत्येव तु संस्मृतत्वात्
अश्लेषनाशौ न हि पातकानाम् ।

---

[1]श्रेष्ठे तु कर्मैव-क, ख. [2]विशेषहानात्-ग. [3]संविधेया—क.
[4]ध्यानश्रुतेश्चापि निषेदुषश्च-क. [5]इत्येव तत्स्यात् विदितश्च—क.

तस्याः *फलित्वैकसमर्थनत्वात्
"एवं विदी"ति श्रवणाच्च [1]नैवम् ॥ ७ ॥

८ ॥ इतराधिकरणम् ॥ ८ ॥

अश्लेषनाशौ हितकर्मणां तु
नैव प्रसक्तौ सुखलाभहेतोः ।
तत्रैव मोक्षप्रतिबन्धकत्व-
साम्यान्मुमुक्षोः स्फुटतः प्रसक्तौ ॥ ८ ॥

९ ॥ अनारब्धकार्याधिकरणम् ॥ ९ ॥

सर्वस्य वैशेषिकशब्दहानेः
अश्लेषनाशौ भवतो हि तस्य ।
नारब्धकार्यस्य हि नैव यस्मात्
"यावन्न मोक्ष्ये"ति [2]विशेषशब्दः ॥ ९ ॥

१० ॥ अग्निहोत्राद्यधिकरणम् ॥ १० ॥

अश्लेषनाशश्रवणात् कृतानां
अकार्यता [3]स्वाश्रमकर्मणां च ।
नैतत्तु कार्यं खलु 'यज्ञ'शब्दात्
विद्यासमुत्पादनशक्तितश्च ॥ १० ॥

११ ॥ इतरक्षपणाधिकरणम् ॥ ११ ॥

"यावन्न मोक्ष्ये"ति विशेषशब्दात्
आरभ्यमाणस्य फलं च कर्म ।

---

* फलत्वैक—क. [1]नैव—ग. [2]विशेषशब्दात्—क. [3]स्वाश्रयकर्मणां—ख.

[1]तद्देहपातावधिकं न चैतत्
तस्याः श्रुतेः तत्फलगोचरत्वात् ॥ ११ ॥

असकृत् कार्यतोपास्तेः[१] [2]अहमित्यप्युपास्यता[२] ।
प्रतीकेष्वन्यथोपास्तिः[३] अङ्गेष्वर्कादिदृष्टयः[४] ॥ १२ ॥
उपास्तेरासनाङ्गत्वं[५] प्रत्यहं चाप्युपास्यता[६] ।
अघस्याश्लेषनाशौ च[७] पुण्यस्यापि तथा भवः[८] ॥ १३ ॥
आरब्धस्य [3]फलित्वं च[९] कार्यताऽऽश्रमकर्मणाम्[१०] ।
कर्मावधित्वं बन्धस्य[११] पादेनानेन साधितम् ॥ १४ ॥

॥ इति चतुर्थस्य प्रथमः ॥

॥ चतुर्थाध्यायस्य द्वितीयः पादः ॥

१२ ॥ वागधिकरणम् ॥ १ ॥

वाचो मनःकारणकत्वहानेः
*वृत्तेर्लयश्चेतसि नैव वाचः ।
तन्नैव तस्याश्च समानभावात्
वाक्छब्दतः सङ्गतिमात्रतश्च ॥ १५ ॥

१३ ॥ मनोऽधिकरणम् ॥ २ ॥

[4]प्राणोऽम्बु तेजःप्रकृतित्वयोगात्
"आपोमयः प्राणः" इति श्रुतेश्च ।

---

[1]तद्देहपातावधिकर्म—ग. *वृत्तिर्लयः-क.
[2]अहमित्थमुपास्यता—क. [3]फलत्वं—क. [4]प्राणोऽम्भ—क.

न स्यादहङ्कारकृतं तु चित्तं
[1]*[प्राणो नभःकार्यमतः स एव] ॥ १६ ॥

१४ ॥ अध्यक्षाधिकरणम् ॥ ३ ॥

[2]प्राणो भवेत् तेजसि योगभागी
तथैव शब्दश्रवणात् इतीदम् ।
न स्यात्तु [3]जीवोपगमादिशब्दात्
प्राणस्य, तेजःश्रवणं तु पश्चात् ॥ १७ ॥

१५ ॥ भूताधिकरणम् ॥ ४ ॥

तेजस्तु "तत्तेज" इति श्रुतत्वात्
तन्मात्रमेवान्यवियुक्तरूपम् ।
न स्यात् तु भूतान्तरसंप्रविष्टं
त्रिवृत्कृतत्वश्रवणादशक्तेः ॥ १८ ॥

१६ ॥ आसृत्युपक्रमाधिकरणम् ॥ ५ ॥

एषा त्वविद्यस्य गतिर्भवित्री
विद्यावतोऽन्यैव पराप्तिशब्दात् ।
नैतत् द्वयं स्यात् उभयोः समाना
[4]गतिः शरीरात् इतरोऽर्थवादः ॥ १९ ॥

१७ ॥ परसंपत्त्यधिकरणम् ॥ ६ ॥

भोगाद्यभावेन निरर्थकत्वात्
[5]यथायथं स्युर्न तु देवतायाम् ।

---

[1]प्राणो न तत्कार्यमतः—ख; तत्कालकृतः—ग [2]प्राणोऽभवत्—क.
[3]जीवोपगमादशब्दात्—ख. [4]गतेः श्रुतत्वात्—क. [5]यथा यथा—क.

संयान्ति तानीति न शंक्यमेतत्
"तेजः परस्यां" इति चोदितत्वात् ॥ २० ॥

१८ ॥ अविभागाधिकरणम् ॥ ७ ॥

तेषां [1]त्रयाणां तु परत्र पुंसि
स्वकारणत्वात् प्रलयस्तु भावी ।
तत्रैव पूर्वैः स्फुटमेकवाक्यात्
संश्लेषमात्रं तदबाधतश्च ॥ २१ ॥

१९ ॥ तदोकोधिकरणम् ॥ ८ ॥

[2]*[मूर्ध्नाऽन्यनाडीभिरिति] व्यवस्था
न सौक्ष्म्यतः संभवशंसि वाक्यम् ।
तत्रैव विद्यामहिमातिरेकात्
[3]परप्रसत्तेश्च तथैव यानम् ॥ २२ ॥

२० ॥ रश्म्यनुसाराधिकरणम् ॥ ९ ॥

निशामृतौ [4]*[रश्म्यनुसारवारणे]
नैव व्यवस्था किरणानुसारे ।
न तद्व्यवस्थैव भवेन्निशीथेऽ
प्यौष्ण्योपलब्धेः [5]*[यदमी हि सन्ति] ॥

---

[1]प्रयाणं—ख. [2]मूर्धन्यनाडीभिरिति—क. [3]परप्रसक्तिश्च—क.
[4]रश्म्यनुसारणा च—क. [5]यत एव सन्ति—क.

२१ ॥ निशाधिकरणम् ॥ १० ॥

दिवा मृतस्यैव परोपसत्तिः
विगर्हितत्वान्मरणस्य रात्रौ ।
न स्यादिदं [1]बन्धककर्महानात्
विद्याबलात् तां वदति श्रुतिश्च ॥ २४ ॥

२२ ॥ दक्षिणायनाधिकरणम् ॥ ११ ॥

मृतस्य मुक्तिर्न हि दक्षिणायने
शशाङ्कसायुज्यं अमुष्य हि श्रुतं ।
न तत्तु विद्या महिमातिरेकतः
श्रुतिस्तु सा विश्रमभूमिगोचरा ॥ २५ ॥

---

वाक् तु चेतसि[1] तत् प्राणे तत् पुनर्जीवचेतसोः[3] ।
तेजसश्चेतरश्लेषः[4] तावन्मात्रस्य तुल्यता[5] ॥ २६ ॥

तेषां परस्मिन् गमनं[6] तस्य च श्लेषमात्रता[7] ।
[2*][मूर्धन्यनाडीनियमो[8] रश्मिनेति व्यवस्थितिः][9] ॥२७॥

निशायां चापि सन्मोक्षो[10] मोक्षणं दाक्षिणायने[11] ।
इत्येतत् सर्वं एतेन [3*][पादेनात्र विचिन्तितम्] ॥२८॥

॥ इति चतुर्थस्य द्वितीयः ॥

---

[1]बाधक—क. [2]मूर्धन्यनाडीनियमरश्मयो न व्यवस्थितिः—क, ख.
[3]पादेनानेन चिन्तितम्—क.

|| चतुर्थाध्यायस्य तृतीयः पादः ||

२३ || अर्चिराद्यधिकरणम् || १ ||

शाखासु बहुविधत्वात् गतिश्रुतेरर्चिरादिनियमो[1] न ।
तन्नैव नियमनं स्यात् सर्वत्राकादिचिह्नसंभवतः || २९ ||

२४ || वाय्वधिकरणम् || २ ||

वायुश्च देवलोकः शब्दविभेदात् पृथग्भवतः ।
न स्यात् "योऽयं पवते स देवलोकः" इति तद्विशेषणतः ||

२५ || वरुणाधिकरणम् || ३ ||

श्रुतिभङ्गेऽप्यगतित्वात् पाठात् वायोः परे तु वरुणाद्याः ।
तन्नार्थवशाद्वरुणः तटितः स्यात् उपरि तदुपरीन्द्राद्याः ||

२६ || आतिवाहिकाधिकरणम् || ४ ||

उपदेशस्य तथात्वात् चिह्नानि त्वर्चिरादयः सरणेः ।
नैतत् गमयितृशब्दात् उपरि परेऽप्यातिवाहिका हि स्युः ||

२७ || कार्याधिकरणम् || ५ ||

चतुर्मुखमुपासितुः गतिरियं स हि प्राप्यते
परस्य परिपूर्णतः सततमेव संप्राप्तितः ।
न तत्परमुपासितुः श्रुतित एव तच्चाप्यसत्
परं तदनुजीवमप्युभयतः श्रुतेर्दर्शनात् ||३३||

---

[1] नियमेन—क.

अर्चिरादेस्तु नियमो[1] वायोः स्वर्गस्य चैकता[2] ।
तटितो वरुणप्राप्तिः[3] आतिवाहिकता[4] ततः ॥ ३४ ॥

[1]*[फलं जीवपरोपास्त्योः] अर्चिरादिगतिस्त्वियम्[5] ।
इति सर्वमनेनैव पादेन परिचिन्तितम् ॥ ३५ ॥

॥ इति चतुर्थस्य तृतीयः ॥

---

## ॥ चतुर्थाध्यायस्य चतुर्थः पादः ॥

---

२८ ॥ संपद्याविर्भावाधिकरणम् ॥ १ ॥

नित्योपलब्धेरसुखत्वतश्च
केनापि रूपेण सुखैकभाजा ।
मुक्तस्य संबन्ध इति त्वसत् स्यात्
स्वेनेति शब्दात् अतिरोहितत्वात् ॥ ३६ ॥

२९ ॥ अविभागेनदृष्टत्वाधिकरणम् ॥ २ ॥

परानुभूतिस्तु विभेदतः स्यात्
साधर्म्यशब्दादतिसाम्यशब्दात् ।
न स्यादिदं नाम तदात्मकत्वात्
[2]*[साम्यश्रुतिस्तद्गुणसाम्यलम्बा] ॥ ३७ ॥

---

[1] फलं जीवात् परोपास्तेः—क. [2] साम्यश्रुतिस्तद्गुणसारलम्बा—क.

३० ॥ ब्राह्माधिकरणम् ॥ ३ ॥

मुक्तस्वरूपं तु गुणाष्टकं स्यात्
तथा श्रुतत्वात् द्युतिमात्रता वा ।
तस्यैव विज्ञानघनत्वशब्दात्
[1]तन्नोभयं स्यात् उभयाविरोधात् ॥ ३८ ॥

३१ ॥ सङ्कल्पाधिकरणम् ॥ ४ ॥

मुक्तस्य पित्रादि तु सप्रयत्नात्
[2]*[सङ्कल्पतो भावि तथैव दृष्टेः ।
ब्रह्मादिकेष्वित्यसदेतत् एषां]
सङ्कल्पसत्यत्वावियोगतः स्यात् ॥ ३९ ॥

३२ ॥ अभावाधिकरणम् ॥ ५ ॥

मुक्तोऽशरीरस्त्वशरीरशब्दात्
इच्छाशरीरी 'बहुधा' इति शब्दात् ।
नैषा व्यवस्था 'बहुधा' तु शब्दात्
बहुश्रुतेश्च त्वयमैच्छिकः स्यात् ॥ ४० ॥

३३ ॥ जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥

मुक्तस्य भोगः खलु साम्यशब्दात्
निर्वोढृता स्यात् भुवनस्य तद्वत् ।

---

[1]तेनोभयं स्यात् उभयोर्विरोधात्—क.

[2]संकल्पशो भावि तथैव दृष्टेः । ब्रह्मादिकेष्वित्यसदेव तेषां—क.

नैतत् परस्यैव तथात्वशब्दात्
भोगानुभूतिः सगुणस्य तस्य ॥ ४१ ॥

---

आविर्भवत्स्वरूपत्वं[1] परानुभवरूपणम्[2] ।
मुक्तस्वरूपनिष्कर्षः[3] सत्यसङ्कल्पता तथा[4] ॥ ४२ ॥

स्वेच्छया सर्वसंभोगः[5] मोक्षस्य च फलोदयः[6] ।
इत्येवमर्थजातं स्यात् पादेनानेन चिन्तितम् ॥ ४३ ॥

॥ इति चतुर्थस्य चतुर्थः ॥

---

इति सेनेश्वराचार्यकृते न्यायकलापसंग्रहे
॥ चतुर्थोऽध्यायः ॥

---

[1]इति श्रीसेनेश्वराचार्यविरचितः
॥ शारीरकन्यायकलापसंग्रहः समाप्तः ॥

---

[1]इति श्रीसेनानाथीये न्यायकलापः संपूर्णः—क.
इति भगवत्सेनापतिमिश्रैः विरचितः—ख.

## ॥ न्यायकलापसङ्ग्रहश्लोकसूची ॥



*प्रथमाक्षरः अध्यायद्योतकः; द्वितीयाक्षरः पादद्योतकः ।

प्र=प्रथमः; द्वि=द्वितीयः; तृ=तृतीयः; च=चतुर्थः ॥

आ



इ



ई



उ

न



प

---

# अधिकरणसूची



*अ.=अध्यायः; पा.=पादः; अधि.=अधिकरणसंख्या.

